


तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचित्रमासिकपत्रिका

मार्च् २०२१

रु.५/-

श्रीनिवासमङ्गापुरम्

## श्रीकल्याणवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः

२०२१ मार्च् ०२ तः १० पर्यन्तम्



## गीतामृतम्

अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः।
प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः।।

(भगवद्गीता २०/१)

सञ्जयः धृतराष्ट्रं प्रति - हे धृतराष्ट्र! उभयसैन्यकृतशङ्खनादसमनन्तरं शस्त्राणां सम्यक्पतने शस्त्रप्रयोगे प्रवृत्ते सति हनूमन्तं ध्वजे धृतवान् अर्जुनः युद्धोद्योगेन स्थितान् धृतराष्ट्रसम्बद्धान् सर्वान् दृष्ट्वा स्वीयधनुः गाण्डीवं सज्जीकृत्य श्रीकृष्णं प्रति यत्किञ्चित् उक्तवान्।

## सङ्कीर्तनम्

आनन्दरूपे निजबोधरूपे
ब्रह्मस्वरूपे श्रुतिमूर्तिरूपे।
शशाङ्करूपे रमणीयरूपे
श्रीरङ्गरूपे रमतां मनो मे।।

(शङ्कराचार्यकृतरङ्गनाथाष्टकम् - १ श्लोकः)

'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुत्युक्तदिशा नित्यं आनन्दस्वरूपे, यथार्थज्ञानस्वरूपे, ब्रह्मस्वरूपे स्वतन्त्रे, समस्तवेदप्रतिपाद्यस्वरूपे, चन्द्रवदुल्लासजनकरूपवत्वादिरमणीयसुसुन्दराचिन्त्याद्भुतशक्तिमति श्रीरङ्गनाथे परमात्मनि चाञ्चल्यगुणयुतं सारासारविवेकहीनं मम मनः निरतं रमताम्।



सम्पादकीयम्

# सर्वव्यापिनमीशानं भजे वेङ्कटनायकम्

ईश्वरः सर्वत्रास्तीति सर्वेषु श्रुति-स्मृति-पुराण-इतिहासादिषु निरूपितः विषय एव। स च ईश्वरः ब्रह्मनाम्ना, प्रजापतिनाम्ना, परमात्मनाम्ना, अक्षरनाम्ना इत्येवं सर्वैः नामभिः व्याहृतः।

श्रीमद्भगवद्गीतायां दशमेऽध्याये विभूतियोगे साक्षात् श्रीकृष्णभगवानेव वदति -

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते।

इति मत्वा भजन्ते मां बुधा भावसमन्विताः।। इति।

अर्थात् अहं समस्तजगतः उत्पत्तिकारणः, मत्तः एव सर्वं प्रवर्तते इत्येवं प्रकारेण ज्ञात्वा श्रद्धाभक्तियुताः बुद्धिमन्तः भक्ताः मां नित्यं भजन्ते इति।

अस्तु तर्हि सर्वत्र स्थितस्य ईश्वरस्य पूजा कथं करणीया इति सन्देहः मानवस्य मनसि उद्भवत्येव। तस्य सन्देहस्य निवृत्तिपुरस्सरं साक्षात् गीताचार्यः 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इति बोधितवान्।

एवं सति हृद्देशः एव अर्चनस्थानं वर्तते। हृन्मन्दिरमित्यपि कथितुं शक्नुमः। नृसिंहपुराणे भगवतः मन्दिरस्य सम्मार्जनेन, शोधनेन च वैकुण्ठावाप्तिः भवतीति प्रोक्तम्। तथाच अत्र हृद्देशरूपे मन्दिरे विद्यमानस्य अज्ञानान्धकार-अरिषड्वर्गरूपावकरस्य अपसरणपूर्वकेण मार्जनेन, शोधनेन, ज्ञानज्योतिप्रसारणेन च अवश्यं स पुरुषः नित्यज्ञानानन्दमयः सच्चिदानन्दरूपो भूत्वा वैकुण्ठधाम अवश्यं समाप्नोति।

अर्थात् भगवतः स्वरूपं 'सर्वं विष्णुमयमिति' विजानन् हृद्देशस्य मालिन्यनिर्मूलनपुरस्सरं अन्तर्हृदये हृदयगुहाकाशे भगवन्तं ध्यायन्, स्तुवन्, अर्चयन् भक्ताः तरन्ति।

सर्वव्यापीत्यत्र गीतायां -

''मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय।

मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव।।'' इति।

अतः अतिकष्टेन लभ्यमाने मनुष्यजन्मनि परमात्मगुणगणश्रवणादिना वैकुण्ठाधिपत्यनुग्रहेण यत्किञ्चित्सुखं योग्यतानुगुणं वैकुण्ठं च प्राप्नुमः।



*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*




तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०७ सञ्चिका-१२

# मार्च् २०२१

श्रीशार्वरिनामसंवत्सरस्य माघकृष्णद्वितीयातः
फाल्गुणकृष्णतृतीयापर्यन्तम्- १९४१




# सप्तगिरिः


गौरवसम्पादकः-
डा.के.एस्.जवहर् रेड्डि I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः:
आचार्य के.राजगोपालन्, Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.


मुखचित्रम् - उभयदेवेरीसमेत श्रीकल्याणवेङ्कटेश्वरस्वामी (श्रीनिवासमङ्गापुरम्)

अन्तिमरक्षापुटः - श्रीकामाक्षीसमेतकपिलेश्वरस्वामी (कपिलतीर्थम्)


## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,
२२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri_helpdesk@tirumala.org


एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-



एम्.नागमाधुरी कामेश्वरी,
चरवाणी - ९४४०८४८८५८

# महाशिवरात्रिवैभवम्

भारतीयसम्प्रदायपरम्परायां सन्ति बहूनि पर्वदिनानि। प्रत्येकस्यापि पर्वदिनस्य आचरणे किमपि कारणं भवत्येव। यतः कारणं विना कार्योत्पत्तिर्न जायते। संस्कृतभाषायां युगम् इति शब्दः संवत्सरः इत्यस्मिन्नर्थे प्रयुज्यते। भारतीयाः प्रतिवर्षं 'युगादि' पर्वदिनामाचरन्ति यतः नूतनवर्षस्यारम्भः तस्मिन् दिने भवतीत्यतः। एवं रूपेण श्रीरामनवमी, गोकुलाष्टमी, दीपावलीत्यादीन् आचरन्ति।

वरलक्ष्मीव्रतमिति पर्वदिनं केवलं आन्ध्रा, कर्णाटकप्रान्ते, एवं 'होली' पर्वदिनं विशेषतया उत्तरभारते एव आचरन्ति। किन्तु ''महाशिवरात्रिम्'' आभारतमाचरन्ति। आचराणपद्धतिः भिन्ना स्यात् किन्तु आचरणमवश्यं क्रियते। तादृशमहापर्वणः आचरणं किमर्थं क्रियते? पर्वदिनस्यास्य आरम्भः कदा जातः? पर्वदिनमिदं भक्ताः कथमाचरन्तीति विषयान् पश्यामः।

### महाशिवरात्रेः कारणम् (किमर्थम्?)

महाशिवरात्रिमाहात्म्यवृत्तान्तम्

शिवपुराणान्तर्गतविद्येश्वरसंहितायामुक्तमस्ति।

गङ्गायमुनासङ्गमस्थाने प्रयागे (अद्यतन अलहाबाद्) ऋषयः सत्रयागमाचरन्तः आसन्। तदा रोमहर्षणमहर्षिः इति नाम्ना प्रसिद्धः सूतमहर्षिः तत्रागच्छति। तथा आगताय सूतमहर्षये सर्वे ऋषयः नमस्कृत्य ''सर्वोत्तमेतिहासवृतान्त - श्रावणाय'' प्रार्थितवन्तः। सः च सूतमहर्षिः तस्य गुरुणा वेदव्यासेन तस्मै उक्तां गाथां श्रावयति।

एकदा पराशरसूनुः व्यासमहर्षिः सरस्वतीनदीतीरे ध्यानं कुर्वन्नासीत्। तदा सूर्य इव प्रकाशमाने विमाने सनत्कुमारः गच्छन्नासीत्। तं दृष्ट्वा व्यासः ब्रह्मकुमारं सनत्कुमारं नमस्कृत्य मुक्तिप्रदायिनीं गाथां श्रावयतु इति प्रार्थितवान्। तदा मन्दरपर्वतस्योपरि स्व-नन्दिकेश्वरयोः संवादं व्यासं श्रावितवान्। तमेव संवादं मम गुरुः वेदव्यासमहर्षिः मां (सूतं) श्रावितवान्। तां गाथां भवद्भ्यः श्रावयामि श्रद्धया श्रृण्वन्तु इति श्रावयति।

सनत्कुमारः नन्दिकेश्वरमेवमपृच्छत् यथा - शिवं साकारमूर्तिरिव, निराकारलिङ्गत्वेन पूजने कारणं किम्? तं वृत्तान्तं श्रावयतु इति नन्दिकेश्वरं पृच्छति। तस्योत्तरत्वेन वृत्तान्तमिदं श्रावयति नन्दिकेश्वरः -

एकदा प्रळयकालसम्प्राप्तौ ब्रह्मदेवः, श्रीमहाविष्णुश्च युद्धाय समुपागतौ, महादेवस्य लिङ्गरूपेणाविर्भावः तदैव जातः। एकदा ब्रह्मदेवः वैकुण्ठं गत्वा, शेषशय्यायां शयानं विष्णुं दृष्ट्वा एवं वदति -

**ब्रह्मदेवः -** भवान् कः? अहं भवतः प्रभुः अस्मि। यः गुरवे गौरवं न प्रददाति सः दण्डनीयः भवति।

तस्य वचनं श्रुत्वा श्रीमहाविष्णुः ब्रह्मदेवमाहूय सुखासनं प्रदाय ''भवतः क्रोधस्य कारणं किम्? इति पृच्छति। तदा

**ब्रह्मदेवः -** अहं कालसमानवेगेन आगतोस्मि। पितामहोस्मि। भवतः जगतश्च रक्षकोऽहम् ।

**महाविष्णुः -** विश्वं मयि अस्ति। भवान् चोरः इव भाति। भवान् मम नाभिकमलतः उद्भूतः। अतः भवान् मम पुत्रः। भवान् व्यर्थं भाषसे।

एवं वादोपवादैः युद्धसन्नद्धौ भवतः। ब्रह्मदेवः हंसवाहनमारुह्य, गरुडमारुह्य श्रीमहाविष्णुः युद्धं आरभेते। तयोः युद्धं द्रष्टुं




सर्वेऽपि देवाः स्वस्ववाहनान्यारुह्यागताः। अत्यन्तोत्कण्ठया युद्धं प्रचलदासीत्। एकस्योपरि अन्यः अग्निहोत्रसमानान् बाणान् सन्धयन्तौ आस्ताम्। युद्धे विष्णुः महेश्वरास्त्रं, ब्रह्मदेवः पाशुपतास्त्रं एकस्योपरि अन्यः सन्धयतः। तदा सर्वेऽपि देवाः भयाकुलाः सन्तः सर्वेऽपि शिवनिवासं कैलासं गच्छन्ति। प्रमथगणानां नायकः उमासहितः मणिगणखचितसिंहासने सभायां महादेवः प्रकाशति। तादृशं महेश्वरं साष्टाङ्गं सर्वे प्रणमन्ति। तदा सर्वेषां मुखारविन्दानि दृष्ट्वैव ब्रह्मदेव-महाविष्ण्वोः युद्धमहं पूर्वमेव जानामि इति महेश्वरः वदति। ब्रह्मदेवस्य श्रीमहाविष्णोश्च प्रभुः महेश्वरः प्रमथगणान् युद्धाय प्रस्थानं कुर्वन्तु इत्युक्त्वा वाद्यालङ्कारयुक्तवाहने पुष्पवर्षैः उमया सह गत्वा युद्धप्राङ्गणस्य समीपे वाद्यानां घोषं स्थगयित्वा युद्धं रहस्यं पश्यति। माहेश्वरपाशुपतास्त्रयोः मेलनसमये महाशिवः अग्निस्तम्भरूपेणाविर्भूय द्वेऽपि अस्त्रे तस्मिन् लीनं करोति। आश्चर्यचकितौ ब्रह्मविष्णू तस्य स्तम्भस्य आद्यन्तौ ज्ञातुं ब्रह्मदेवः हंसरूपं धृत्वा, श्रीमहाविष्णुः वराहरूपं धृत्वा प्रस्थानं कुर्वन्ति आद्यन्तप्राप्तेरभावात् पुनः प्रत्यागच्छन्ति।

(इतोऽपि कथा वर्तते विस्तारभिया न प्रदत्तम्)

तदनन्तरं ब्रह्मविष्णुसहिताः सर्वेऽपि देवाः महाशिवं धूपदीपनैवेद्यैरर्चितवन्तः। तेषां भक्त्या सन्तुष्टः परमशिवः ''भवतां भक्त्याऽहं सन्तुष्टः अस्मि। अद्यारभ्य मम लिङ्गरुपेणाविर्भाव यस्मिन् तिथौ सः शिवरात्रिमहापर्वदिनत्वेन प्रसिद्धो भविष्यति। अद्यतनदिने उपवासं कृत्वा भक्त्या मां लिङ्गरुपेणाथवा साकाररूपेण ये अर्चयन्ति तेभ्यः महाफलप्राप्तिः अवश्यं भविष्यतीति'' परमशिवः उक्तवान्।

## महाशिवरात्रिं कदा आचरन्ति?

वर्षे प्रतिमासस्य कृष्णपक्षचतुर्दश्यां शिवरात्रिः भवति। सा शिवरात्रिः मासशिवरात्रिनाम्ना प्रसिद्धा भवति। माघमासकृष्णपक्षचतुर्दश्यां चन्द्रः शिवजन्मनक्षत्रेणार्द्रानक्षत्रेण सहितः यदा तदा ''महाशिवरात्रिः''। द्वादश शिवरात्रिषु महाशिवरात्रिः अत्यन्तपवित्रदिनं भवति।

**कथमाचरन्ति : -** महाशिवरात्रिपर्वदिने भक्ताः प्रातरुत्थाय स्नानादिकं समाप्य तेषां भक्त्या परशिवं बिल्वपत्रैः, अभिषेकैः, वैदमन्त्रैः महामृत्युञ्जयमन्त्रैरर्चयन्ति। एतत्सर्वं कर्तुं द्रव्यं नास्ति चेदपि किञ्चित् जलं तस्योपरि भक्त्या स्थापयामश्चेत् परमशिवः अत्यन्तसन्तुष्टः भवति। अतः तं परमशिवं भोलाशङ्करः इत्यपि वदन्ति। भक्ताः दिने उपवासं, रात्रौ शिवलीलाकथापारायणादिभिः जागरणं कुर्वन्ति।

## जागरणम् -

जागरणं नाम निद्रात्यागः नास्ति। प्रकृतौ निद्रावस्थायां विद्यमानां शिवशक्तिं शिवपूजाभजनलीला-श्रवणादिभिः जागृत्य, सः शिवः (मङ्गलमयः) भूत्वा, सर्वं शिवस्वरूपमितिमत्वा दर्शनमेव जागरणम्। तदा एव शिवपूजायां सायुज्यं, शिवभजने समीप्यं, शिवध्याने सारूप्यं सिध्यति इति शङ्कराचार्यणाम् वचनम्।

शिवालयेषु लिङ्गोद्भवकाले अत्यन्तपवित्रां लिङ्गोद्भवपूजां निर्वहन्ति।

नवविधभक्तिमार्गेषु कमपि मार्गमनुसृत्य भक्ताः अद्य जागरणं कुर्वन्ति।

अग्निलिङ्गरुपेण महाशिवस्याविर्भावप्रदेशः अरुणाचलत्वेन प्रसिद्धः।

महेश्वरपाशुपतास्त्रयोः मेलनं यदि भवति तर्हि सृष्टिरेव न भवति स्म। सृष्टिरक्षणाय अग्निस्तम्भरूपेण आविर्भूतः परमशिवः अस्मान् सदा सर्वदा रक्षत्येव। तेन रक्षिता वयं सन्मार्गगामिनो भवेम।



# तुम्बुरुतीर्थमाहात्म्यम्

- य.उमामहेश्वररावः
चरवाणी - ७२८६९८०१७७

**श्रीवेङ्कटाचलमाहात्म्यम् : -**

अयि मान्याः! समग्रविश्वे वेङ्कटाद्रीति स्थानस्य अपेक्षया नान्यद् दिव्यस्थलं वर्तते। एवमेव वेङ्कटेश्वरस्वामिनः अपेक्षया नान्यो देवः आसीत्, न भविष्यति।

**श्रीवेङ्कटाचलस्य माहात्म्यम् अनिर्वचनीयम् -** नानापुराणेषु नानारीतिभिः अनेकाभिः कथाभिः प्रकाशितं भवति श्रीवेङ्कटाचलमाहात्म्यम्। यथा उक्तम् -

**वेदेषु च पुराणेषु वेङ्कटेशकथामृतम्।**
**वर्णितं चेतिहासेषु भारताद्यागमेषु च।।**
**(आदित्यपुराणम्)**

वेदेषु, पुराणेषु, इतिहासेषु, भारताद्यागमेषु च श्रीवेङ्कटेश्वरस्वामिनः तथा श्रीवेङ्कटाचलक्षेत्रस्य माहात्म्यं घोषितं वर्णितञ्च। तादृशः वेङ्कटाचलः पर्वतोत्तमः महापुण्यः च।

**श्रीवेङ्कटाचलतीर्थमाहात्म्यम् -**

तिरुमलपुण्यक्षेत्रं भूलोकवैकुण्ठत्वेन प्रसिद्धम्। श्रीमहाविष्णुः तस्य वैकुण्ठं परित्यज्य वेङ्कटाचले श्रीनिवासत्वेन आगतवान् इति वेङ्कटाचलस्य वैशिष्ट्यं बोधयति ज्ञापयति तस्मिन् भूलोकवैकुण्ठे बहूनि पुण्यतीर्थानि सन्ति। तत्र तीर्थस्नानेन बहूनि प्रयोजनानि सर्वे प्राप्तवन्तः इति पुराणेषु बह्व्यः कथाः बोधयन्ति।



सन्तानप्राप्त्यर्थं, दारिद्र्यनाशार्थं, महापातकनाशार्थं नरकलोकनिवारणार्थं, सर्वतीर्थफलप्राप्त्यर्थं, भुक्तिमुक्तिप्राप्त्यर्थं च वेङ्कटाचलतीर्थानि पुरा जनाः भक्त्या विश्वासेन च संदर्श्य पुण्यं प्राप्तवन्तः इति कथारूपेण पुराणेषु श्रीवेङ्कटाचलतीर्थमाहात्म्यं वर्णितम् अस्ति।

एवं श्रीवेङ्कटाचलतीर्थमहत्त्वं विस्तृतमतिविशालं च। तत्त्वमपि नूनम्। तादृशानि पुण्यानि श्रीवेङ्कटाचलतीर्थानि षट्षष्ठिकोटितीर्थानि सन्ति इति ब्रह्मपुराणे उक्तम् अस्ति। तेषु तीर्थेषु अपि अष्टोत्तरसहस्रतीर्थानि मुख्यानि। तत्र उक्तिः -

**षट्षष्टिकोटितीर्थानि ....... षष्टिमष्टोत्तरं विदुः।।** इति

तत्रापि सद्विज्ञानप्रदानि तीर्थानि अष्टोत्तरशतम्। तेषु तीर्थेषु अपि भक्तिवैराग्यप्रदानि अष्टषष्ठितीर्थानि सन्ति। तेषु तीर्थेषु अपि मुक्तिदानि तीर्थानि सप्त एव। यथा -

**मुक्तिदान्यत्र सप्तैव.... मर्त्यास्ते यान्ति परमं पदम्।**

तानि मुक्तिदानि तीर्थानि श्रीस्वामिपुष्करिणी, आकाशगङ्गा, पापविनाशनम्, पाण्डुतीर्थं, कुमारधारातीर्थं, तुम्बुरुतीर्थं, कृष्णतीर्थं च। एतेषु तीर्थेषु घोणाख्यस्य तुम्बुरुतीर्थस्य चरित्रं माहात्म्यञ्च एवं भवति।

**तुम्बुरुतीर्थम् -** श्रीवेङ्कटाचलतीर्थेषु षट्षष्ठिकोटिषु तीर्थेषु महापुण्यतीर्थं, सद्विज्ञानप्रदं तीर्थं, भक्तिवैराग्यदतीर्थम्, मुक्तिदं तीर्थं तुम्बुरुतीर्थं भवति। एतस्यैव तीर्थस्य अपरं नाम घोणतीर्थम् इति। घोणतीर्थस्य विषये (तस्य चरित्रविषये च) ब्रह्मोत्तरखण्डे वर्णितम् अस्ति।


विनयो जयः सत्यसन्धो दाशार्हः सात्वताम्पतिः।।



एकदा महर्षयः सूतं पृच्छन्ति यत् समग्रभूमण्डले सर्वतीर्थेषु सर्वपापनाशनतीर्थं किम् इति। तत्र एवं श्लोकोक्तिः-

सूत! वेदार्थतत्वज्ञ! वेदव्यासकृपानिधे।
ब्रूहि नस्सर्वतीर्थेषु तीर्थं सर्वाघनाशनम्।।

तदा सूतः - कथयामि कथां सम्यक्सर्वपापापनोदिनीम्।
यस्याश्श्रवणमात्रेण दृष्टादृष्टफलागमः।।

**सूतोत्तरं - कथारूपम् : -**

सूतः कथयति - ''हे महर्षयः यस्याः कथायाः श्रवणमात्रेण समस्तपापानि नश्यन्ति, पुण्यफलं च प्राप्नुवन्ति, तादृशीं कथां वदामि। यदा कथां श्रुण्वन्ति तदा ध्यानेन सावधानेन च श्रुणुयुः। तत्र भवन्तः अर्हाः'' इति।

पुरा एकदा महानुभावाः वसिष्ठादिमहर्षयः कार्येच्छया ब्रह्मलोकं गतवन्तः। तत्र देवैः, सिद्धैः, पुण्यश्लोकैः राजभिः, सनन्दसनकाद्यैः, गङ्गादिनदीभिः, सर्वतीर्थैः, वेदैः, अनन्तशास्त्रैश्च संसेव्यमानं ब्रह्माणम् उपगम्य वसिष्ठः एवम् उक्तवान् - हे प्रभो! ब्रह्मन्! अहं वसिष्ठः अस्मि। मयि दयया प्रसन्नो भव'' इति। तदा ब्रह्मा वसिष्ठं दृष्ट्वा उपवेष्टुम् उक्तवान्। तत्र ब्रह्मसभामध्ये जायमानानां प्रसङ्गानां समाप्त्यनन्तरं ब्रह्मा वसिष्ठं दृष्ट्वा तस्य आगमनस्य कार्यं किमिति पृष्टवान्।

**वसिष्ठप्रार्थना -**

तदा वसिष्ठः सविनयं चतुराननं तं ब्रह्माणं प्रति आगमनकारणं प्रोक्तवान् एवं प्रर्थितवान् - ''हे ब्रह्मन्! जनाः सर्वे वसिष्ठो महान् परमादरणीयश्च इति मम आदरं कुर्वन्ति, तत्प्रशंसनं मम दुःखाय, आदरादपि मम लज्जा भवति। अहं राजपुरोहितः, चक्रवर्तिनां शुभाशुभान् निर्वर्तयामि यद् भवति पापाय। प्रजानां पापं राजानं प्रति, राज्ञः पापं राजगुरुं प्रति गच्छति। अतः मम पापप्राप्तिः अवश्यं भवति। मम तपःशक्त्या पापवारणं न शक्यते। तत्पापविनाशाय मार्गान्तरम् अजानन् सदा मम खेदः भवति। एतावदिति न। अन्यदपि अस्ति।

**सर्वाबद्धवृत्तान्तः**

कस्मिंश्चिद्ग्रामे कश्चन सर्वाबद्धनामा दुराचारः, दरिद्रः, सदा दुष्कृतः दुष्टः ब्राह्मणः अस्ति। सः यज्ञस्थानेषु, द्विजातिषु संतिष्ठत्सु सर्वदा यत्किञ्चिद् दक्षिणापेक्षी सन् स्थितो भवति। तं दृष्ट्वा अन्यः एकदा ''हे मूढ! स्नानाचारवर्जितः भवान् द्विजातिषु वसिष्ठवत् तिष्ठति। भवतः इदं न स्थानम्'' इति तस्मै क्रुद्धवान्।

तद् अवमानं सोढुं न शक्नुवन् अत्यन्तदुःखितः सन् उदाहृतं मां मनसि ध्यात्वा 'स एव वसिष्ठो मां रक्षतु, पावनं च मां करोतु'' इति नित्यं मन्नाम एव उच्छरति। तेन अनाचरितं पापं नास्ति। तथापि माम् आश्रयते अतः अश्रितसंरक्षणं न्याय्यमिति मम मनः तस्मिन् लग्नं जातम्। मत्पापं मदाश्रितजनपापं च शमयितुं भवानेव मार्गम् उपदिशेत्'' इति। तदा ब्रह्मा वसिष्ठम् एवं कथितवान् - हे मुनिसत्तम! पापशमनार्थं प्रायश्चित्तापनोद्यानि शास्त्राणि उपदिष्टानि खलु। तत्तच्छास्त्रेषु यथोक्तं समाचरणेन भवतः पापानि नश्यन्ति किल'' इति। तदा वसिष्ठः ब्रह्माणम् उक्तवान् -

**मम तस्य च पापनि .... स्थान्तमुपायं वदस्व मे।।**

मम, तस्य सर्वाबद्धस्य च पापानि घनानि अधिकानि च। यानि प्रायश्चित्तेन न नश्यन्ति। अत एव त्वाम् आगतः अस्मि। त्वमेव मम शरणम्। आवयोः पापराशयः यथा नश्येयुः तथा एकम् उपायं वद'' इति।

**ब्रह्मणः उपायः**

एवं पृष्टः ब्रह्मा स्वहृदये विचार्य श्रीवेङ्कटेशं मनसा नमस्कृत्य, तस्य दिव्यमङ्गलस्वरूपं ध्यात्वा वसिष्ठमेवम् उपदिष्टवान् -

**काश्या दक्षिणदेशे वै......याति तादृङ्गहीधरः।।**

हे वसिष्ठ! काशीनगरस्थे दक्षिणदेशे वेङ्कटाद्रि इति कश्चन महान् ख्यातः पुण्यश्च पर्वतः अस्ति। यः वेङ्कटाद्रि इति नाम जप्त्वा एव धन्यः भवति। षट्षष्ठिकोटितीर्थानि तस्मिन् वेङ्कटाचले सन्ति।

**तस्य वेङ्कटशैलस्य मध्ये घोणमिति स्मृतम्।**
**एकं तीर्थं पवित्रं वै तत्र स्नातश्शुचिस्सदा।।**

तत्र स्वामितीर्थतीरे दक्षिणे प्रान्ते लक्ष्म्या स्थितं श्रीनिवासप्रभुं यः नमति सः सकलसौख्यानि अनुभवति। अतः तादृशे वेङ्कटाद्रिमध्यभागे घोणाख्यं तीर्थम् अस्ति। तत्र स्नातः सकलपापविनिर्मुक्तः भवति। अतः त्वं त्वदाश्रितश्च वेङ्कटाद्रिं गत्वा मीनमासपूर्णिमायां स्नानं कृत्वा पूतौ भवेताम्।

**श्रीनिवासानुग्रहः -**

ब्रह्मणा यथोक्तप्रकारं वसिष्ठः तदाश्रितेन सर्वाबद्धेन सह वेङ्कटाचलं गतवान्। तत्र मीनमासे पौर्णम्यां घोणतीर्थे स्नात्वा विधिवत्तर्पणादिकार्यं कृत्वा सर्वाबद्धेन सह उपविश्य जपं कृतवान्। जपान्ते श्रीहरिं ध्यायन् समाधिस्थ अभवत् सः मुनिः।

एवं श्रीश्रीनाथः वेङ्कटेशः लक्ष्म्या सह आविरासीत्। तीर्थार्थम् आगतान् सर्वान् कटाक्षयन् भगवान् वसिष्ठमेवमुक्तवान् - हे मुनिसत्तम! अहं प्रसन्नः जातः। तव शुभं भूयात्। वरं वृणोतु इति। तदा वसिष्ठः - अयं विप्रः मम सखा, अहं च महापापानि कृतवन्तौ। आवां पवित्रौ, पापरहितौ च कुरु'' इति प्रार्थितवान्। तदा

**वेङ्कटाचलनायकः -**

हे वसिष्ठ! आश्रितेषु तव वात्सल्यं मम सन्तोषाय भवति। अयं च त्वयि विश्वस्य भक्तिं विहितवानतः अस्य हृदि अहं लक्ष्म्या सह वसामि। तदर्थम् अद्य प्रभृति सर्वासिद्धिः इत्याख्यव्यवहारं प्राप्नोति, धार्मिकः धनिकश्च भवति। हे वसिष्ठ! त्वमपि पापरहितः असि इति अनुगृह्णन् भगवता घोणतीर्थमाहात्म्यम् उक्तम्।

**घोणतीर्थस्नानफलम्**

**पुरुषो वाऽथवा नारी.... स्नानेन शाम्यति।।**

स्त्री वा पुरुषः वा क्षत्रियः वा ये केऽपि वा अस्मिन् घोणतीर्थे स्नान्ति चेत् सकलपापविवर्जिताः भूत्वा अभीष्टसिद्धिमाप्नुवन्ति। ज्ञात्वा वा अज्ञात्वा वा कृतं पापं नश्यति।

**वर्षे वर्षे मनीमासे पूर्णिमायां शुभे दिने।**
**स्नाति तुम्बुरतीर्थेऽस्मिन् स धन्यो भुवनत्रये।।**

प्रतिवत्सरं मीनमासे पूर्णिमायां अस्मिन् तीर्थे कृतस्नानाः धन्याः भवन्ति। कन्यायाः उत्तमभर्ता, युवतेः दीर्घमाङ्गल्यं सत्सन्ततिः, वृद्धायाः पापनाशः - पुत्रपौत्रादिसम्पद् धनसम्पत्तिः, धनार्थिनः धनम् विद्यार्थिनः विद्या च प्राप्यते।

अस्मिन्तीर्थे उक्ते पुण्यदिने कृतदानाः पुण्याः भवन्ति। सुवर्णदानेन तेषां लक्ष्मीः स्थिरा भवति। गोदानं, रजतदानं, भूदानं, फलदानं, तिलदानं, विद्यादानं, वस्त्रदानं च भगवतः श्रीनिवासस्य प्रियं भवति। एवञ्च श्रीनिवासः कथयति यत् मनुष्याणां सर्वपापविनाशनं स्नानेन दानेन च करोति। एतेन श्रीवेङ्कटाचले घोणतीर्थमाहात्म्यं सम्यक् ज्ञातम् इत्येव।

एवं वसिष्ठः शिष्येण सर्वासिद्धेन सह आश्रमं गतवान्। एवमुक्त्वा सूतः अन्ते स्पष्टीकरोति।

**सन्देशः**

हे द्विजोत्तमाः! परमपवित्रं श्रीवेङ्कटाचलमाहात्म्यं ज्ञातवन्तः। तुम्बुरुतीर्थसदृशं पापनाशनकारकं तीर्थं न अन्यदस्ति। मीनपौर्णम्यां अस्मिन् तीर्थे स्नानम् उत्तमोत्तमम्। येन सकलाभीष्टासिद्धिः भवति, येन तुम्बुरुः स्वनाम तीर्थस्य तस्य कारितवान् तथा। अतः तुम्बुरुतीर्थचरित्रं तन्माहात्म्यञ्च जानन्तः वयम् अवश्यं पवित्राः भवेम।



# श्रीलक्ष्म्यष्टोत्तर शतनामावलिः

ॐ प्रकृत्यै नमः
ॐ विकृत्यै नमः
ॐ विद्यायै नमः
ॐ सर्वभूतहितप्रदायै नमः
ॐ श्रद्धायै नमः
ॐ विभूत्यै नमः
ॐ सुरभ्यै नमः
ॐ परमात्मिकायै नमः
ॐ वाचे नमः
ॐ पद्मालयायै नमः १०

ॐ पद्मायै नमः
ॐ शुचये नमः
ॐ स्वाहायै नमः
ॐ स्वधायै नमः
ॐ सुधायै नमः
ॐ धन्यायै नमः
ॐ हिरण्मय्यै नमः
ॐ लक्ष्म्यै नमः
ॐ नित्यपुष्टायै नमः
ॐ विभावर्यै नमः २०

ॐ अदित्यै नमः
ॐ दित्यै नमः
ॐ दीप्तायै नमः
ॐ वसुधायै नमः
ॐ वसुधारिण्यै नमः
ॐ कमलायै नमः
ॐ कान्तायै नमः
ॐ कामाक्ष्यै नमः
ॐ क्रोधसम्भवायै नमः
ॐ अनुग्रहपरायै नमः ३०

ॐ बुद्ध्यै नमः
ॐ अनघायै नमः
ॐ हरिवल्लभायै नमः
ॐ अशोकायै नमः
ॐ अमृतायै नमः
ॐ दीप्तायै नमः
ॐ लोकशोकविनाशिन्यै नमः
ॐ धर्मनिलयायै नमः
ॐ करुणायै नमः
ॐ लोकमात्रे नमः ४०

ॐ पद्मप्रियायै नमः
ॐ पद्महस्तायै नमः
ॐ पद्माक्ष्यै नमः
ॐ पद्मसुन्दर्यै नमः
ॐ पद्मोद्भवायै नमः
ॐ पद्ममुख्यै नमः
ॐ पद्मनाभप्रियायै नमः
ॐ रमायै नमः
ॐ पद्ममालाधरायै नमः
ॐ देव्यै नमः ५०

ॐ पद्मिन्यै नमः
ॐ पद्मगन्धिन्यै नमः
ॐ पुण्यगन्धायै नमः
ॐ सुप्रसन्नायै नमः
ॐ प्रसादाभिमुख्यै नमः
ॐ प्रभायै नमः
ॐ चन्द्रवदनायै नमः
ॐ चन्द्रायै नमः
ॐ चन्द्रसहोदर्यै नमः
ॐ चतुर्भुजायै नमः ६०

ॐ चन्द्ररूपायै नमः
ॐ इन्दिरायै नमः
ॐ इन्दुशीतलायै नमः
ॐ आह्लादजनन्यै नमः
ॐ पुष्ट्यै नमः
ॐ शिवायै नमः
ॐ शिवकर्यै नमः
ॐ सत्यै नमः
ॐ विमलायै नमः
ॐ विश्वजनन्यै नमः ७०

ॐ तुष्ट्यै नमः
ॐ दारिद्र्यनाशिन्यै नमः
ॐ प्रीतिपुष्करिण्यै नमः
ॐ शान्तायै नमः
ॐ शुक्लमाल्यांबरायै नमः
ॐ श्रियै नमः
ॐ भास्कर्यै नमः
ॐ बिल्वनिलयायै नमः
ॐ वरारोहायै नमः
ॐ यशस्विन्यै नमः ८०

ॐ वसुन्धरायै नमः
ॐ उदाराङ्गायै नमः
ॐ हरिण्यै नमः
ॐ हेममालिन्यै नमः
ॐ धनधान्यकर्यै नमः
ॐ सिद्धये नमः
ॐ स्त्रैणसौम्यायै नमः
ॐ शुभप्रदायै नमः
ॐ नृपवेश्मगतानन्दायै नमः
ॐ वरलक्ष्म्यै नमः ९०

ॐ वसुप्रदायै नमः
ॐ शुभायै नमः
ॐ हिरण्यप्राकारायै नमः
ॐ समुद्रतनयायै नमः
ॐ जयायै नमः
ॐ मंगळादेव्यै नमः
ॐ विष्णुवक्षस्थलस्थितायै नमः
ॐ विष्णुपत्न्यै नमः
ॐ प्रसन्नाक्ष्यै नमः
ॐ नारायणसमाश्रितायै नमः १००

ॐ दारिद्र्यध्वंसिन्यै नमः
ॐ देव्यै नमः
ॐ सर्वोपद्रववारिण्यै नमः
ॐ नवदुर्गायै नमः
ॐ महाकाल्यै नमः
ॐ ब्रह्मविष्णुशिवात्मिकायै नमः
ॐ त्रिकालज्ञानसम्पन्नायै नमः
ॐ भुवनेश्वर्यै नमः १०८

॥ इति श्रीलक्ष्म्यष्टोत्तरशतनामावलिः ॥



१३-०२-२०२१ दिनाङ्के चेन्नै, (तमिळनाडु), टि.नगरे ति.ति.दे. पक्षतया श्रीपद्मावतीदेव्याः नूतनालयनिर्माणाय भूमिपूजां निरवहन्। तत्र च श्री श्री श्री विजयीन्द्रसरस्वतीस्वामिनः, ति.ति.दे. पालकमण्डल्यध्यक्षाः श्री वै.वि.सुब्बारेड्डि, तथा ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा ॥ के.यस्.जवहर् रेड्डि ऐ.ए.एस् महाभागाः भागिनः अभवन्।



२२-०२-२०२१ दिनाङ्के तमिळनाडुस्थे 'उकुन्दूर् पेट' ग्रामे ति.ति.दे. श्रीवेङ्कटेश्वरस्वामिनः नूतनालयनिर्माणाय भूपूजां निरवहन्। अस्मिन् तमिळनाडु राष्ट्रमुख्यमन्त्रिणः मान्यश्री ई.के.पळनिस्वामि, ति.ति.दे. पालकमण्डल्यध्यक्षाः वै.वि.सुब्बारेड्डि महोदयाश्च भागं गृहीतवन्तः।




२७-०२-२०२१ दिने पालकमण्डल्याः एक्स्. अफिषियो सभ्यत्वेन प्रमाणस्वीकारं कृतवतीभ्यः आन्ध्रप्रदेशस्य देवादाय - धर्मादायशाखायाः प्रिन्सिपल् सेक्रटरी डा ॥ जि.वाणी मोहन्, ऐ.ए.एस् महोदयाभ्यः श्रीस्वामिनः चित्रपटप्रदातारः ति.ति.दे. अधिकार्यनिर्वहणादिकारिणः श्री ए.वि.धर्मारेड्डि महाभागाः।



१६-०२-२०२१ दिनाङ्के पोट्टिश्रीरामुलु नेल्लूरु जिल्लायां आचरिते वसन्तपञ्चमी सरस्वततीपूजामहोत्सवे ति.ति.दे. पालकमण्डल्यध्यक्षाःश्री वै.वि.सुब्बारेड्डि महोदयाः तथा इतराधिकारिणश्च।



१७-०२-२०२१ दिनाङ्के ति.ति.दे. पक्षतः आचरिते कल्याणमस्तु कार्यक्रमस्य पुनः प्रारम्भोत्सवे ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा ॥ के.यस्.जवहर् रेड्डि ऐ.ए.एस् महोदयाः, हिन्दूधर्मप्रचारपरिषदः कार्यदर्शिनः डा ॥ के.राजगोपालन् तथा इतरागमशास्त्रपारङ्गताश्च



११-०२-२०२१ दिनाङ्के अलिपिरि (तिरुपति) समीपे श्रीपुरन्दरदासविग्रहस्य १७४ तमं आराधनामहोत्सवं पुरस्कृत्य पुष्पाञ्जलिसमर्पकाः दाससाहित्यप्रोद्यमस्य विशेषाधिकारिणः श्री पि.आर्.आनन्दतीर्थाचार्याः तथा भजनमण्डलिसभ्याश्च।

# पुराणेषु श्रीवेङ्कटाचलाधीशः

- डा.गङ्गिशेट्टि लक्ष्मीनारायणः
चरवाणी - ९४९४२४८३४८



अस्मिन् भूलोके लक्ष्म्या विलासः श्रीवेङ्कटेश्वरः आविर्भूतः। तं श्रीनिवासं सामाश्रित्य प्रमोदं प्राप्नुवन्तु।

बंदिसुत मनदोळगे इवनडि
द्वंद्व भजिसलु बंद भयहर।
इंदुधर सुरवृंदनुत गो -
विंद घनदयसिंधु श्रीहरि।।

मनसि एतस्य श्रीनिवासस्य पादपद्मयोः भजनया भयाः दूरीकृताः भविष्यन्ति। अयं शिवेन्द्रादिभिः वन्दितः गोविन्दः दयासिन्धु श्रीनिवासः भवति।

द्वार देडबलदल्लि। जयविजयरिब्बरु
सेरि सेविपरल्लि। सनकादिनुतशृं
गार निधि अगंदल्लि। मुत्तिनलि हार शोभिपुदल्लि
विस्तारदल्लि।।

वारवारके पूजे गोंबुव। हारमुकुटाभरण कुंडल
धार भुजकेयुर भूषित। मारपित गुण मोहनांग
चारु पीतांबर कटि कर वीर कल्हारादि पूविन।
हार कोरळोळु एसेवुतिरेवद। नारवंदनु नगुतनलियुत।।
।।बंद।।

स्वामिनः श्रीनिवासस्य गर्भलयद्वारस्य उभयपार्श्वयोः दण्डायमानौ भूत्वा जयविजयौ भगवन्तं सेवेते। सनकादिभिः स्तुतस्य श्रीनिवासस्य शृङ्गारदेहात् निस्सरन्ति मौक्तिकमालाः। नित्यपूजाः सुवर्णकण्ठाभरणानि कुण्डलानि मकुटानि इत्यादिभिः भूषितः मन्मथजनकः सौन्दर्यवान् कण्टमालया मन्दस्मिततया विलसति।

एल्लभकुतरभीष्ट। कोडबुदकेताकै
वल्य स्थानव बिट्ट। शेषाद्रिमंदिर
दल्लि लोलुप दिट्ट। सौभाग्यनिदिगिदि
रिल्ल भुजबलपुष्ट। कस्तूरि यिट्टु।।

चेल्व फणेयलि शोभिसुव सिरि। वल्लभन गुण पोगळदिह जग
खुल्लरदेल्लण पराक्रम। मल्ल मर्दन मातुलारि।
फल्गुणन सख प्रकटनागिह। दुर्गभनु अघदूर बहूमां
गल्य हृदयनु सृष्टिगे। उल्लासकोडुतलि चेंददिंदलि।।

श्रीवेङ्कटेश्वरः भक्तानां सकलाभीष्टसिध्यर्थं कैवल्य नामकं वैकुण्ठं त्यक्त्वा शेषाद्रिनिलयं समागतः। अयं श्रीवेङ्कटेश्वरः सौभाग्यनिधिः। अयमजेयः बलयुक्तश्च भवति। शोभमाने ललाटे कस्तूरिकातिलकेन शोभते। अयं श्रीवेङ्कटेश्वरः दुष्टान् परिमार्जयति। मुष्टिविद्यानिपुणः कंसध्वंसकः पार्थसखः दुर्लभः पापदूरश्च श्रीवेङ्कटेश्वरः भक्तेभ्यः अनुग्रहपरम्परामनुगृह्य शोभते।

पदक कौस्तुभधार। सरिगेय कंधर
सुदरुशनदरधार। सुंदर मनोहर।
पदयुगदि नूपुर। इट्टि हनु सन्मुनि
हृदयस्थित गंभीर। बहुदान शूर।

विधि भवाद्यर पोरेवदातनु। तुदि मोदलु मध्यम विरहितनु
उदुभवादिगळीगे कर्तनु। त्रिदश पूजित त्रिभुवनेश।
पदुविलासदि स्वामि तीर्थदि। उदिसुतिरे सिरिमहिळे साहितदि।

पदुमनभा पुरन्दर विठला।
प्रति वरुष ब्रह्मोत्सवदि मेरेयुत।।

कौस्तुभादिमणिमयमालाः धृत्वा सुन्दरपदयुगलेन शोभमानः श्रीवेङ्कटेश्वरः नूपुरे धृतवान्। सन्मुनिविहारः बहुदानशूरः भूत्वा ब्रह्मरुद्रेभ्यः अनुग्रहप्रदः आदिमध्यान्तरहितः ब्रह्मरुद्रेभ्यः कर्ता भूत्वा त्रिभिः लोकैः पूज्यते। त्रिभुवनेशः श्रीवेङ्कटेश्वरः सद्विलासेन स्वामिपुष्करिणीतटे श्रीदेवीभूदेवीसमेतपद्मनाभः पुरन्दरविठलः सम्भूय प्रतिवर्षमिव ब्रह्मोत्सवे शोभते।

निसर्गतया विराजमानं श्रीवेङ्कटेश्वरस्य दिव्यमङ्गलविग्रहं वृत्यानुप्रासाद्यलङ्कारैः नाट्यानुकूलेन तालानुकूलेन च गायकेभ्यः हृदययोल्लासं पाठकेभ्यश्च विचित्रप्रमोदं प्रयच्छति कीर्तनमिदम्।

''निन्न दिव्यमूरितय कण्णुदणियनोडि धन्यनादेनोधरेयोळु - इत्यादि कीर्तनं भक्त्युत्साहेन गीयते चेद् मनः आनन्दनिलये अवश्यं सञ्चरति।

पल्लविः - निन्न दिव्यमूरितय कण्णुदणियनोडि धन्यनादेनोधरेयोळु।

अनुपल्लविः इन्नु ई भव भयके अंजलेतको चेन्न सिरि वेंकटेश।।''

नयनाभयं भवतां मूर्तिं दृष्ट्वा अहं धन्यः अभवम्। अस्मिन् लोके भवभयबाधाभ्यः भीतिरनावश्यकी।

''एसु जन्मद पुण्य बंदोदगितो श्रीस्वामि पुष्करिणियोळु।
स्नान जपतपमाडि वरहदेवरनोडि श्रीस्वामिमहद्वारके।
ई शरीरवनु ईड्याडि प्रदक्षिणेमाडि लेशदिंपजगळुतलि।
आसुवर्णदगरुड गंभवने नोडि संतोषदिंकोडाडिदे। बिडदे।''

नैकजन्मकृतपुण्यप्रभावेण तिरुमलक्षेत्रमागत्य स्वामिपुष्करिणीतटे स्नात्वा जपतपादिकं कृत्वा वराहमूर्तिं सन्दर्श्य श्रीवेङ्कटेश्वरालयमहाद्वारे साष्टाङ्गनमस्कारं प्रदक्षिणश्च कृत्वा स्वामिनं श्रीनिवासं स्तुत्वा सुवर्णगरुडस्तम्भं दृष्ट्वा प्रमोदेन संस्तुतवान्।

''वोट्टनेरडने द्वारदांटिपोगुतलि दट्टणियुं बहुजनदलि।
घट्टमनदलि तलेय चट्टिडुतनेट्टने कटांजनेकेबरुतलि।
कृष्णाजिनदवर पेट्टुगळकाणुतलि कंगेट्टु हरियेनुतलि।
वेट्टदधिपतिनिन्न दृष्टिंद काणुतलि। सुट्टतेन्न यदुरितवु।''

तदनु द्वितीयद्वारस्य अनन्तरं भक्तजनगोविन्दनामस्मरणं पश्यन् श्रृण्वन् च अन्तः प्रविश्य अद्रिनाथं दृष्ट्वा मम दुरितं आमूलं भस्मीभूतं जातमिति अचिन्तयम्।

'शिरदल्लि रविकोटि तेजदिंदेसेवंथ वरकिरीटवुकुंडल
कोरळिळिहसरिगे वैजयंतीयमां परिपरि हारगळनु।
उरदि श्रीवत्स करदिशंखचक्रगळु वरनाबि माणिकवनु।
निरुपममणिखचित कटि सूत्र पीतांब्रचरण द्वयंदुगेयनु।।इन्नु।।

रविकोटितेजोमकुटधृतं शिरसि, कुण्डलधृतं श्रोत्रयोः, वैजयन्तीत्यादिमालाधृतं कण्ठे, श्रीवत्साङ्कितवक्षस्थलं शङ्खचक्रधृतं हस्ते, माणिक्यप्रकाशनाभिं, पीतम्बरधृतशरीरं नूपुरालङ्कृतपादयुक्तं श्रीनिवासमपश्यम्।

'इक्षुचापनपितने पक्षीन्द्रादि लक्ष्मीपतिकमलाक्षने।
अक्षय अजसुरेन्द्रादि वंदितने साक्षाजगन्नाथने।
राक्षांतकने निरपेक्ष नित्यतृप्तने निरुपम निस्सीमने।
कुक्षियोळ गीरेळुलोकवनु ताळदवने रक्षिसुवुदेंददयादीमुवदि।।'

(अवशिष्टम् अग्रिमसञ्चिकायां)


**STATEMENT ABOUT OWNERSHIP AND OTHER PARTICULARS ABOUT**

**SAPTHAGIRI**

**(MONTHLY)**

**FORM IV**

*See Rule 8*

1. Place of Publication : TIRUPATI
2. Periodicity of its Publication : Monthly
3. Honorary Editor : **Dr.K.S.Jawahar Reddy,** I.A.S., Executive Officer, TTD
4. Printer's Name : **Sri P.Ramaraju,** M.A.,
   Whether citizen of India : Yes
   Address : Special Officer (Publications and Press) T.T.D. Tirupati.
5. Editor & Publisher's Name : **Prof. K.Rajagopalan,** Ph.D.,
   Whether citizen of India : Yes
   Address : Chief Editor (I/C), Sapthagiri T.T.D. Journal, Tirupati
6. Name and address of individuals who own the Newspaper and partners or shareholders holding more than one percent of the Total Capital } Board of Trustees represented by the Executive Officer on behalf of T.T.D., Tirupati

*I, K.Rajagopalan hereby declare that the particulars given above are true to the best of my knowledge and belief.*

TIRUPATI
Date : 28-2-2021

**(Sd.) Prof.Rajagopalan**
*Signature of the Publisher*



# गीताप्रस्थानम्

- कुमारी पार्वती वि.जे.
चरवाणी - ९९४७६०४७०२

### बाह्मणगीता -

भागवतस्य पञ्चमस्कन्धे एकादशाध्यायादारभ्य त्रयोदशाध्यायं यावत् ब्राह्मणगीता वर्तते। भरत-रहूगणसंवादः अस्यां गीतायां प्रवर्तते। अत्र क्रमेण व्यवहारपरमार्थयोः विवेचनं, भक्तिज्ञानयोः स्वरूपप्रतिपादनं, जडभरतस्य पूर्वजन्मवृत्तान्तः, संसाराटवीवर्णनम्, अध्यात्मतत्त्वस्य निरूपणमित्यादयः विषयाः प्रस्ताविताः।

### ४. शुकगीता -

पञ्चमस्कन्धस्य षोडशाध्यायादारभ्य षड्विंशाध्यायपर्यन्तं इयं गीता वर्तते। गीतायामस्यां ब्रह्माण्डान्तर्गतस्य भूगोलस्य खगोलस्य च वर्णनं सुसूक्ष्मं कृतमस्ति।

### ५. यमगीता -

भागवतस्य सप्तमस्कन्धे द्वितीयाध्याये दृश्यते। अस्यां यमदेवस्य तत्त्वोपदेशः वर्तते। शत्रुशरेण हतस्य सुजज्ञकनामकराज्ञः पत्नीनां क्रन्दनं श्रुत्वा बालकरूपं धृत्वा यमः आविर्भूय तासां कृते देहादीनामनित्यताम् आत्मतत्त्वञ्च उपदिश्य तासां शोकं निवर्तयति।

### ६. नवयोगीश्वरगीता -

श्रीमद्भागवतस्य एकादशस्कन्धे द्वितीयाध्यायात् पञ्चमाध्यायपर्यन्तं नवयोगीश्वरगीतेति प्रथिता। परिशुद्धचित्तः वसुदेवः श्रीकृष्णगृहं समागतं देवर्षिनारदमुपसृत्य स्वमोहापगतये स्वजिज्ञासामाविष्करोति। मर्त्यः यान् धर्मान् अवधार्य मृत्युभयादपि विमुच्य सुखी प्रसन्नचित्तश्च भवति तेषाम् भागवतधर्माणाम् अनुष्ठानक्रमं वसुदेवः देवर्षये पप्रच्छ। तदा निमि-नवयोगीश्वरसंवादेन जिज्ञासामुपशमयति। सा एव नवयोगीश्वरगीता। तत्र जगतः विनाशित्वं, परमात्मनि सर्वात्मना समर्पणस्य तथा भगवन्नामोच्चारणस्य च महत्त्वं, भगवद्भक्तोत्तमानां लक्षणं, कर्मयोगनिरूपणं, भगवदवताराणां स्मरणं, भगवद्भक्तिविमुखानां गतिः इत्यादि नैके विषयाः चर्चिताः।

### ७. उद्धवगीता -

श्रीमद्भागवते मुक्तिलक्षणे एकादशस्कन्धे नवयोगीश्वरगीतानन्तरं श्रीकृष्णोद्धवसंवादः वर्तते। षष्ठाध्यायादारभ्य एकोनत्रिंशाध्यायपर्यन्तं अयं संवादः विद्यते। सः संवादः एव उद्धवगीतेति विख्यातः। अवधूतगीता, हंसगीतेति गीताद्वयम् अस्यामेव अन्तर्भवति। श्रीकृष्णः स्वस्य स्वस्थानगमनावसरे भक्तशिरोमणेः उद्धवस्य संशयनिवारणं करोति। अत्र सांख्ययोगविचारः, अवधूतब्राह्मणस्य यदोश्च संवादः, पञ्चविंशतिगुरवः, अन्तःकरणशुद्धेः प्राधान्यं, कर्मणः नश्वरत्वं, मायायाः वैशिष्ट्यं, भक्तियोगः, सत्संगस्य माहात्म्यं, गुणत्रयं, भगवतः हंसावतारः, सनकादीनां संशयनिवारणञ्च, भगवद्विभूतीनां वर्णनं, वर्णाश्रमादीनां विस्तुतया प्रतिपादनं, दुर्जनानां गतिः, ज्ञानयोगः इत्याद्यनेके विषयाः अत्र परिगृहीताः। श्रीकृष्णगीतेति अस्याः गीतायाः नामान्तरम्।

### ८. अवधूतगीता -

उद्धवगीतान्तर्भूता इयं गीता एकादशस्कन्धस्य सप्तमाष्टमनवमाध्यायत्रयात्मकम्। अवधूतब्राह्मणस्य यदोश्च संवादरूपायामस्यां पञ्चविंशतिगुरूणां विवरणं, गुरुतत्त्वोपदेशश्च दृश्यते।

### ९. हंसगीता -

इयं गीता अपि उद्धवगीतान्तर्गता। भागवते एकादशस्कन्धे त्रयोदशाध्याये षोडशश्लोकादारभ्य द्विचत्वारिंशत् श्लोकपर्यन्तं वर्तते इयं गीता। भगवान् हंसरूपं धृत्वा सनत्कुमाराणां संशयदूरीकरणं करोति। अयं प्रसङ्गः हंसगीतायां वर्ण्यते।

भागवते तत्त्वोपदेशिकाः नवगीताः यद्यपि प्रथिताः तथापि तत्त्वज्ञानात्मिका एका गीता दशमस्कन्धे सप्ताशीतितमे अध्याये विद्यते। सा श्रुतिगीतेति विख्यायते। अस्यां राज्ञा परीक्षिता प्रकटितस्य संशयस्य निवृत्तिः क्रियते श्रीशुकमुनिना। वेदैः क्रियमाणा स्तुतिः एवास्ति इयं श्रुतिगीता। श्रुतिवाक्यानां सन्निवेशनेन तत्त्वभूयिष्टा इयं **वेदस्तुतिरित्यपि** प्रथिता।

### १०. श्रुतिगीता -

श्रीमद्भागवतपुराणस्य दशमस्कन्धे सप्ताशीतितमे अध्याये वर्तते वेदस्तुतिरिति नाम्ना प्रथिता इयं श्रुतिगीता। श्रुतिगीता न केवलमेका स्तुतिः अपि तु श्रुत्या गीतमित्यतः यथा भगवद्गीता उपनिषद् तथा एका उपनिषद्। अस्यां गीतायामपि आध्यात्मिकाः नैके विषयाः प्रस्तुताः।

तत्कुटकवृत्ते विरचितायां पञ्चाशच्छ्लोकसहितायाम् अस्यां गीतायां चतुर्दशतमश्लोकात् वेदानां स्तुतिः आरभ्यते।

षडशीतितमाध्यायस्य अनुवर्तनरूपेणैव अस्य अध्यायस्य प्रारम्भः। षडशीतितमे अध्याये स्वतः प्रामाण्यवतां वेदानां प्रवृत्तिपद्धतिः सूचिता अस्ति। अस्य वाक्यस्य अनुवर्तनरूपेण श्रुतिगीतायाः प्रक्रमः।

**एवं स्वभक्तयो राजन् भगवान् भक्तभक्तिमान्।**
**उषित्वादिश्य सन्मार्गं पुनर्द्वारवतीमगात्॥**

अस्मिन् श्लोके सन्मार्गम् उपदिश्य भगवान् श्रीकृष्णः प्रस्थितवानिति प्रोक्तमस्ति। अत्र सन्मार्गो नाम सतां वेदानां स्वतः प्रामाणिकानां समस्तज्ञानकाण्डोपेतानां प्रवृत्तिमार्गः इत्यर्थः।

### गणेशगीता : -

गणेशपुराणस्य गीताखण्डे गणेशगीता वर्तते। अध्यायद्वयव्यापिनी एषा भगवद्गीतायाः प्रतिबिम्बरुपा वर्तते।

### ईश्वरगीता : -

कूर्मपुराणस्य उत्तरभागे एषा एकादशाध्यायात्मिका ईश्वरगीता वर्तते।

### ब्रह्मगीता : -

स्कान्धपुराणस्य यज्ञवैभवखण्डे द्वादशाध्याययुता ब्रह्मगीता वर्तते।

### रामगीताः -

अध्यात्मरामायणस्य उत्तरखण्डे रामगीता वर्तते।

### देवी गीता : -

देवीभागवतस्य सप्तमस्कन्धे दशाध्यायपरिमिता देवीगीतेयं वर्तते। देवी एनामुपदिदेश।

### यमगीता : -

यमगीता त्रिविधा दृश्यते। विष्णुपुराणे, अग्निपुराणे, नृसिंहपुराणे चैनां गीतां पश्यामः।

एतदतिरिच्चापि बह्व्यः गीताः वर्तन्ते स्वतन्त्रगीताः अन्यालम्बनाश्चेति।

श्रीमद्भगवद्गीतायां यथा अर्जुनाय श्रीकृष्णः विश्वरूपं दर्शयति तद्वत् शिवगीतायां, देवीगीतायां, गणेशगीतायाम् अपि विश्वरूपसन्दर्शनं विद्यते। तत्र एकैकस्याः गीतायाः अपि विभिन्नं महात्म्यं वर्तते।

एवं समस्तलोकोपकारिकाभिः श्रीमद्भगवद्गीतासदृशीभिः गीताभिः सुसंपन्नमस्ति गीताप्रस्थानम्। तस्मादेव केवलगीताशास्त्रपठनेनैव सुकुमारबुद्धिमन्तोपि परमपदमाप्नुवन्ति।

अतः कलिकालकलायितं दुःखोदर्कं तर्तुं गीताशास्त्रपठने पाठने च नियुक्ताः कटिबद्धाश्च सन्तः अमितानन्दमवाप्नुमः।

॥शम्॥



# निष्ठया श्रद्धया कीर्तिः

- कुमारी वीणा चन्द्रन्
चरवाणी - ९७४६११६३२०



अयि भोः सुकमारहृदयाः! श्रुतिस्मृतिपुराणेषु न केवलं ब्रह्मतत्त्वविचारः श्रूयते अपितु काश्चन लोकोपकारककथाः विस्तृततया दृश्यन्ते। तत्रैकामधुना स्मरामः।

हस्तिनापुरम् इति विश्वप्रसिद्धस्य साम्राज्यस्य राजकुमाराः आसन् पाण्डवाः कौरवाः च, तेषां गुरुः आसीत् महाधनुर्धारी पण्डितश्रेष्ठः श्रीमान् द्रोणाचार्यः।

तेषां गुरुकुलपठनकाले एकदा द्रोणाचार्याः धनुर्वेदस्य पाठनाय सर्वान् एकत्र आहूतवान्। ततः किञ्चित् दूरे विद्यमानं वृक्षं अदर्शयत्। वृक्षस्योपरि विद्यमानं काष्ठनिर्मितं खगमेकं सूचयित्वा अवोचत् 'अद्य भवतां शस्त्राणां लक्ष्यस्थानं भवति तस्य खगस्य नेत्रं' तदर्थं सज्जाः भवन्तु इति। कुमाराः सर्वे सज्जताम् आरब्धवन्तः।

तदानीं गुरुः उक्तवान् शस्त्रप्रयोगात् पूर्वं मम प्रश्नस्य उत्तरं एकैकेनापि दातव्यम् इति। गुरुः क्रमेण एकैकम् आहूय पृष्टवान् (''तत्र भवता किं दृश्यते'' इति।) ''तत्र भवान् किं पश्यन् अस्ति? इति। तत्र एकः वृक्षसमूहं इति उक्तवान्, अपरः आकाशं, अन्यः शिखराणि, पुनरेकः पत्राणि एवम् एकैकः अपि भिन्नानि उत्तराणि उक्तवन्तः। एवं क्रमेण अर्जुनस्य अवसरः समागतः। तदा गूरोः प्रश्नस्य उत्तरत्वेन अर्जुनः अवोचत् ''आचार्य! तस्य खगस्य नेत्रं विहाय नान्यत् किञ्चित् दृश्यते मम'' इति।

अर्जुनस्य उत्तरं श्रुत्वा तुष्टः अभवत् द्रोणाचार्यः। सः अर्जुनं प्रति उक्तवान् एवं चेत् शस्त्रस्य प्रयोगं कुरु इति। गुरोः अनुज्ञां प्राप्य लक्ष्यं मनसि निधाय अर्जुनः निष्ठया, श्रद्धया च स्वशस्त्रं प्रयुक्तवान्। तत् शस्त्रं साक्षात् लक्ष्यं विच्छिद्य बहिरागतं च। अजुर्नस्य निष्ठां कौशलं च दृष्ट्वा, गुरुः तस्मिन् प्रीतोऽभवत्। एतादृशतीव्रनिष्ठया, श्रद्धया, लक्ष्यैकदृष्ट्या, प्रयत्नेन च अर्जुनः अजय्यः, विश्वप्रसिद्धः धनुर्धारी अभूत्।



अस्मिन् अर्जुनः गुरुणा लब्धां धनुविद्यां लक्ष्यैकदृष्टिः सन् पठित्वा तदुपयुज्य श्रेष्ठधनुःशास्त्रपारङ्गतत्वेन यथा प्रख्यातः, तद्वत् अस्माकं समेषामपि छात्रावस्थायां अथवा उद्योगावस्थायां इत्याद्यवस्थासु सर्वत्रापि प्रप्रत्येकं एकैकं लक्ष्यं भवत्येव खलु तादृशलक्ष्ये एव दृष्टिं प्रसार्य अन्यत्र अधिकदृष्टिहीनाः भूत्वा स्वस्वगुरुणां अभिमान-शुभाशंसनाशीर्वादपुरस्सरं उन्नतोन्नतपदव्यादीन् प्राप्य सार्वत्रिकगौरवादीन् आप्य ससौख्यं जीवितुं प्रभवामः।

अतः -

लक्ष्यैकदृष्टिः प्राप्नोति गौरवान्वितजीवनम्।
आमुष्मिकयशःसम्पत् यथा पाण्डवमध्यगः।।



चित्रकथा



# किरातार्जुनीयम्

तेलुगु मूलम्
श्री डॉ.कंपल्लि रविचन्द्रन्
संस्कृतानुवादः -
श्री.बि.गिरीश् कुमारः
चित्राणि -
श्री तुम्बलि शिवाजी

अर्जुनः इन्द्रं प्रसन्नमकरोत्

भो इन्द्रदेव! मह्यं दिव्यास्त्राणि प्रदेहि

हे मूढ! इतोपि अस्त्राणामावश्यकता कुतः? पुण्यलोकान् प्रदास्यामि सुखेन जीवतु।

मदीयसहोदराः भ्रातारः अनुजाश्च वनेऽस्मिन् क्लेशमनुभूयमानाः सन्ति। तान् त्यक्त्वा एकाकी एव सुखमनुभवामि किम्? मया न शक्यते। मरणानन्तरमपि मे कीर्तिः स्थिरा भवेत्। परं सुखार्थं अपकीर्तिं नार्जयामि।

वत्स! तव औन्नत्यं महत्तरं शोभते। तव इष्टप्राप्त्यर्थं आदौ महादेवस्य दर्शनं अवश्यकम्। प्रथमं तस्य दर्शनं करोतु।

परमेश्वर! भक्तवत्सल! अर्जुनः घोरतपसि मग्नः अस्ति। तस्मात् वरदानपूर्वकं विश्रान्तिं प्रदेहि।

हे ऋषयः शान्तचित्ताः भवन्तु अर्जुनस्य कामं पूरयिष्यामि

ऋषीणां गमनानन्तरं महदेवः किरातकरूपं धृतवान्। पार्वती अपि तदनुगुणतया स्वरूपं परिवर्तितवती। उभावपि अर्जुनस्य समीपप्रान्तेषु विहारं चक्रतुः।

''मूक'' नामकः निशाचरः वराहरूपेण अर्जुनं हन्तुं अगच्छत्। तपः क्रियमाणः अर्जुनः सत्वरं शर, बाणादीन् गृहीत्वा तं वराहं हन्तुं उद्युक्तः अभवत्।



हे! तं वराहं अहं मारयामि, भवान् मा हन्तु

तव वचनं कुतो मया पालनीयम्

अर्जुनः किरातश्च उभावपि स्वस्वबाणैः तं वराहं मारितवन्तः



को भवान्? अस्मिन् निर्जनारण्ये स्त्रिया सह अटन्नस्ति। एनं निशाचरं हन्तुमुद्युक्तेन मया सह समानतया कुतः शरप्रयोगं कृतवान्? नैषः व्याधस्य धर्मः।

निर्जनारण्ये भवान् कुतः अस्ति? दर्शने नागरिकः इव अत्यन्तसुकुमारतया दृश्यमाणोऽस्ति। वराहविषयस्तु... प्रथमतया शरप्रयोगः मया कृतः। मया मारितः एव वराहः त्वया पुनः हतः। बलिष्ठः इति मत्वा मां निन्दयन्नस्ति। यदि त्वं समर्थोऽसि तर्हि मया युद्धं कुरु!...

तर्हि सन्नद्धो भव

किमेतानि अस्त्राणि। अस्मात् परं बलिष्ठानि अस्त्राणि न सन्ति वा? अस्मात् परं प्रकर्षेण योद्धुं असमर्थोऽसि वा?

अमोघानि ममास्त्राणि, तान्यपि तृणप्रायं क्रियमाणोऽसौ न हि सामान्यः व्याधः, अपि तु अवश्यं कोऽपि महनीयः स्यात्।

अग्निना प्रदत्तानि अक्षयतूणीराणि समाप्तानि। अदृश्यो गाण्डीवश्च। इदानीं अर्जुनः निरायुधः।

तदनु अर्जुनः मुष्टिघातेन युद्धं चकार। किरातोऽपि स्वमुष्ट्या ताडितवान्। तेन अर्जुनः निस्पृहः जातः।

अनन्तरं अर्जुनः उत्थाय सत्वरं स्नात्वा, मृदा निर्मितस्य शिवलिङ्गस्य उपरि पुष्पगुच्छं निधाय कञ्चित्कालं ध्यानं आचरितवान्। तदनन्तरं किरातकस्य दर्शने सति, तस्य शिरसि पुष्पगुच्छं दृश्यते।

हे पितः! माम् अनुगृहीतुं किरातकवेषेणागतवान् वा? धन्योऽस्मि प्रभो!

अर्जुन! त्रिलोकेष्वपि न भवादृशः शूरः विद्यते। तव अनन्यभक्त्या सन्तुष्टोऽस्मि। मदीयं दिव्यास्त्रं ते प्रदास्यामि। तेन सर्वत्र जयमवाप्नोति।

धन्योऽस्मि देवदेव! दीनरक्षकस्य भवतः दर्शनेनैव महान् सन्तोषः सञ्जातः। मम तपः पूजा च सार्थकतां आप्नुतः तव दर्शनमेव मम महद्भाग्यम्।

शुभमस्तु

अग्रिमसंचिकायां श्रीवेङ्कटेशस्य दिव्यलीलाविलासान्तरं दृष्ट्वा धन्याः भवेम... स्वस्ति



वेधाः स्वाङ्गोऽजितः कृष्णो दृढः सङ्कर्षणोऽच्युतः।

# रसप्रश्नाः

- श्री वि.प्रदीपाचार्यः
चरवाणी - ९४९१६४६५३२

१. विष्णुसहस्रनामस्तोत्रं कुत्र वर्तते?
अ. श्रीमद्भागवते आ. रामायणे
इ. ब्रह्माण्डपुराणे ई. महाभारते

२. महाभारतस्य द्वितीयं पर्व किम्?
अ. वनपर्व आ.सभापर्व
इ. भीष्मपर्व ई. विराटपर्व

३. महाभारते अन्तिमं पर्व किम्?
अ. विराटपर्व आ. स्वर्गारोहणपर्व
इ. उद्योगपर्व ई. शल्यपर्व

४. को द्रौणि : -
अ. अर्जुनः आ. दुर्योधनः
इ. युधिष्ठिरः ई. अश्वत्थामा

५. दासीपुत्रः कः
अ. विदुरः आ. मैत्रेयः
इ. धृतराष्ट्रः ई. पाण्डुः

६. महाभारतस्य भीष्मपर्वणि वर्तते।
अ. दुर्गासप्तशती आ. श्रीमद्भागवतम्
इ. देवीभागवतम् ई. श्रीमद्भगवद्गीता

७. भीष्मस्य पितृकृतं नाम किम्?
अ.देवव्रतः आ.देवदत्तः
इ. भद्ररथः ई. वज्रदत्तः

८. एषु किं पर्व महाभारते नास्ति?
अ.द्रोणपर्व आ.भीष्मपर्व
इ. युधिष्ठिरपर्व ई. शल्यपर्व

९. महाभारते कति पर्वाणि सन्ति?
अ.अष्टदश आ.त्रयोदश
इ. द्वादश ई. चतुर्दश

१०. महाभारतं विभक्तम् अस्ति?
अ.काण्डेषु आ.अध्यायेषु
इ. सर्गेषु ई. पर्वसु

उत्तराणि - १.ई २.आ ३.आ ४.ई ५.अ ६.ई ७.अ ८.इ ९.अ १०.ई

अस्य चित्रपटस्य रञ्जितं कुर्मः वा?



उपरि चित्रपटस्य अधो निर्दिष्ट प्रदेशे स्थापयामेव।



Edited and Published on behalf of T.T.Devasthanams by Prof. K.Rajagopalan, Ph.D., Chief Editor, T.T.D., and Printed at T.T.D.Press by Sri. P.Ramaraju, M.A., Special Officer., (Press & Publication), T.T.D. Press, Tirupati - 517 507.

 वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः।। 

तिरुमलतिरुपतिदेवस्थानम्

ओण्टिमिट्ट

# श्रीकोदण्डरामस्वामिनः ब्रह्मोत्सवः

## २०२१ एप्रिल् २१ तः २९ पर्यन्तम्



२१-०४-२०२१ सौम्यवासरः
प्रातः - ध्वजारोहणम्
रात्रौ - शेषवाहनम्

२२-०४-२०२१ बृहस्पतिवासरः
प्रातः - वेणुगानालङ्कारः
रात्रौ - हंसवाहनम्

२३-०४-२०२१ भृगुवासरः
प्रातः - वटपत्रशायिनः अलङ्कारः
रात्रौ - सिंहवाहनम्

२४-०४-२०२१ मन्दवासरः
प्रातः - नवनीतकृष्णालङ्कारः
रात्रौ - हनुमत्सेवा

२५-०४-२०२१ भानुवासरः
प्रातः - मोहिनीसेवा
रात्रौ - गरुडसेवा

२६-०४-२०२१ इन्दुवासरः
प्रातः - शिवधनुर्बाणालङ्कारः
रात्रौ - आह्वानम्, कल्याणोत्सवः
गजवाहनम्

२७-०४-२०२१ भौमवासरः
प्रातः - रथोत्सवः

२८-०४-२०२१ सौम्यवासरः
प्रातः - कालियमर्दनालङ्कारः
रात्रौ - अश्ववाहनम्

२९-०४-२०२१ बृहस्पतिवासरः
प्रातः - चक्रस्नानम्
रात्रौ - ध्वजावरोहणम्

